# संस्कृत-प्रवेशिका

## [ द्वितीयो भागः ]

प्रणेता

श्री प्रियव्रतो वेदवाचस्पतिः


प्राप्तिस्थान —

पुस्तक भण्डार, गुरुकुल कांगड़ी, हरिद्वार ।

| अक्टूबर, | कार्तिक | मूल्य |
| --- | --- | --- |
| १९५८ | २०१५ | ८७ नये पैसे |

# विषय-सूचिका

# संस्कृत-प्रवेशिका

## द्वितीयो भागः



### प्रथमः पाठः

## सूर्यः

| | | |
|---|---|---|
| ज्योतिषा | अस्तमयते | घर्मेण |
| प्ररोहन्ति | उदयते | लीयते |

सूर्यः पूर्वस्यां दिशि उदयते । तस्य उदये सर्वाः दिशः ज्योतिषा प्रकाशन्ते । मनुष्याः पशवः पक्षिणः सर्वे तस्य उदये स्वकर्माणि कुर्वन्ति । तस्य प्रकाशं विना कोऽपि किमपि कर्तुं न शक्नुयात् । तस्य प्रकाशेन घर्मेण च ओषधयः प्ररोहन्ति पच्यन्ते च । पक्वानाम् ओषधीनां भोगेन वयं जीवामः । स पश्चिमस्यां दिशि

अस्तमयते । तस्मिन् अस्तं गते सर्वं जगत् तमसि लीयते । साधवः बालाः सूर्यस्य उदये प्रबुध्यन्ते । प्रबुध्य च परमेश्वरं नमन्ति ।

अभ्यासः

१ सूर्यः कस्यां दिशि उदयते, कस्यां च अस्तमयते ?
सूर्यस्य प्रकाशेन को लाभः ?
साधवः बालाः कदा प्रबुध्यन्ते । ततश्च किं कुर्वन्ति ?
२ कः शब्दः, का च अत्र विभक्तिः — दिशि, ज्योतिषा, पक्षिणः, तमसि ।

---

द्वितीयः पाठः

## क्रीडनः कुमारः (क)

| | | |
|---|---|---|
| अन्वेष्टुकामः | अतिवाहयितुम् | प्रभाते |
| आचिनोमि | चटकाम् | अन्विष |

गोपालः कदापि पठने रुचिं न अकरोत् । स सदा चिरेण विद्यालयं गच्छति स्म । पठितं पाठं च कदापि सम्यक् न अस्मरत् । स एकदा प्रभाते बहुचिरेण प्रबुद्धः । यदा स प्रबुद्धः तदा तस्य सर्वे सहपाठिनः विद्यालयं गता अभूवन् । स तस्मिन् दिने विद्यालयं न अगच्छत । क्रीडायै गृहात् निर्गतः ।

क्रीडायै कंचित् सहायम् अन्वेष्टुकामः कस्यचित्

वृक्षस्य अधस्तात् एकां चटकाम् अपश्यत् । ताम् अव-लोक्य अवदत् — 'चटके ! आगच्छ क्रीडावः ।' चट-कया कथितम् — 'अहं न क्रीडामि । मम शिशवः सन्ति । तेषां भोजनाय कणान् आचिनोमि । अहम् अलसवत् समयम् अतिवाहयितुं न शक्नोमि । तस्मात् कञ्चित् क्रीडायै सहायम् अन्विष ।'

अभ्यासः

१ गोपालः कीदृशः बालकः आसीत् ?
गोपालः वृक्षस्य अधस्तात् किम् अपश्यत् ?
गोपालः चटकां अवलोक्य किम् अवदत् ?
चटकया किं कथितम् ?

२ एतेषां शब्दानां रूपाणि ब्रूहि — रुचिः, सहपाठिन्, चटका, क्रीडा, शिशुः ।

—

तृतीयः पाठः

# क्रीडनः कुमारः ( ख )

| | | |
|---|---|---|
| आदाय | पिपीलिकाम् | सकाशम् |
| संचारः | निषीदन्तीम् | निष्कर्मा |

चटकया एवम् उक्तः गोपालः मार्गे तण्डुलस्य कणम् आदाय गच्छन्तीं पिपीलिकाम् एकाम् अप-

श्यत् । पिपीलिकायाः सकाशे गत्वा अवदत् —

'भद्रे ! आगच्छ, मया सह क्रीडने सहाया भव । येन केचित् क्षणाः आनन्देन अतिवाहिताः भवेयुः ।' गोपालस्य भाषितं श्रुत्वा पिपीलिका अकथयत् — 'अयि बाल ! न अहं त्वया सह क्रीडितुम् इच्छामि । एष आयाति वर्षासमयः, यस्मिन् अस्माकं सञ्चारः सर्वथा रुद्धः भविष्यति । वर्षाणां समये भक्षणाय वयं सर्वाः पिपीलिकाः तण्डुलान् संचिनुमः । तस्मात् कंचित् अन्यं क्रीडायाः सहायम् अन्विष ।'

निराशः गोपालः पुष्पात् पुष्पं निषीदन्तीं मधु-मक्षिकाम् अपश्यत् । तस्याः सकाशं गत्वा तामपि क्रीडायै आह्वयत् । तया विहस्य उक्तम् — 'अयि बाल ! किं क्रीडायाः अयं कालः ? किं न पश्यसि मां मधु संचिन्वतीम् ? यदि अहं क्रीडार्थिनी मधु न संचि-नुयाम्, तर्हि अन्याः मक्षिकाः मधुकोशात् मह्यं भागं न दास्यन्ति । तस्मात् अहं कर्मणि संलग्ना क्रीडायां वृथा समयं न यापयितुंशक्ता । अन्यं कमपि सहायं लभस्व ।'

मधुमक्षिकया अपि एवम् उक्तः गोपालः अचि-न्तयत् — अस्मिन् जगति सर्वे जन्तवः कर्माणि

कुर्वन्ति । केवलम् अहम् एव निष्कर्मा भ्रमामि । ततः प्रभृति स सदा पठने रुचिम् अकरोत् ।

### अभ्यासः

१ गोपालः मार्गे कीदृशीं पिपीलिकाम् अपश्यत् ?
गोपालः पिपीलिकां किम् अवदत् ?
वर्षासु पिपीलिकाः किं कुर्वन्ति, मधुमक्षिकाः च किम् ?
गोपालः चटकादिभिः किं अशिक्षित ?

२ कोऽत्र धातुः, कश्च लकारः — अपश्यत्, भवेयुः, अकथयत्, संचिनुमः, इच्छामि, कुर्वन्ति, लभस्व ।

३ कोऽर्थः — क्रीडन्ती, गच्छन्ती, निषीदन्ती, संचिन्वती । कस्मिन् लिंगे च इमानि रूपाणि ? एषां पुंल्लिङ्गे रूपाणि लिख ।

—

चतुर्थः पाठः

## सतां संगः

| | | |
|---|---|---|
| पार्श्ववर्तिनः | प्राक् | अनुभूतः |
| निवारणाय | पान्थः | आघ्राय |

कश्चित् पान्थः वनमार्गेण गच्छति स्म । गच्छता तेन पार्श्ववर्तिनः कस्यचित् वृक्षस्य शाखा छिन्ना । स यदा तया शाखया युक्तं हस्तम् अकस्मात् स्वनासिकायाः समीपम् अनयत्, तदा तेन तस्यां मनोहरः गन्धः

अनुभूतः। तं मनोहरं गन्धम् अनुभूय असौ अचिन्तयत् — 'अहो ! कीदृशः मनोहरः गन्धः अस्यां शाखायां विद्यते । एवंविधः गन्धः कदाचित् पूर्वं तु मया अस्य वृक्षस्य न दृष्टः । तत् अनेन अयं मनोहरः गन्धः कुतः प्राप्तः ।" आत्मनः सन्देहस्य निवारणाय स तं वृक्षमेव अपृच्छत् ।

वृक्षः अकथयत् — 'भो पान्थ ! भवता मम गन्धम् आघ्राय आश्चर्यं न कर्तव्यम् । बहुभ्यः वर्षेभ्यः प्राक् अत्र एकः चन्दनस्य वृक्षः अभवत् । तस्य चन्दनस्य मनोहरेण गन्धेन वयं गन्धेन हीनाः अपि गन्धवन्तः अभवाम । तेन भवान् मयि इमं मनोरमं गन्धं जिघ्रति ।'

गुणैः हीनाः अपि पुरुषाः गुणवद्भिः सह वासेन गुणवन्तः भवन्ति । अतः छात्रैः सदा गुणवद्भिः सह वासः कर्तव्यः ।

अभ्यासः

१ वनमार्गेण गच्छता पान्थेन किं कृतम् ? तेन शाखायां किम् अनुभूतम् ?
गुणवद्भिः सह वासेन को लाभः ?
छात्रैः किं कर्तव्यम् ?

२ कोऽत्र धातुः, कश्च लकारः — विद्यते, जिघ्रति, अपृच्छत्, अभवाम ।
अनयोः लकारयोः रूपाणि ब्रूहि । एतौ लकारौ कं कालं द्योतयतः ।

पञ्चमः पाठः

# लेखकः

वेदना　　　　प्रत्युपानयति　　　　व्याजः

कश्चित् ग्रामीणः कस्यचित् लेखकस्य समीपं गत्वा तं 'मह्यं पत्रम् एकं लिख' इति प्रार्थयत। लेखकेन उत्तरं दत्तं मम पादे वेदना वर्त्तते, अतः अन्यः कश्चित् लेखकः अन्विष्यताम्। ग्रामीणः अपृच्छत्—'अहं भवन्तं क्वचित् गमनाय न कथयामि, तत् 'मम पादे वेदना' इति किम् उत्तरम्!' लेखकः अवदत्—'मम लिखितस्य पठनाय जनः माम् एव आह्वयन्ति। अतः मया उक्तं 'मम पादे वेदना भवति' इति।'

किंचित् कर्म कर्तुम् अनिच्छन् जनः यं कमपि व्याजं प्रत्युपानयति। साधुना पुरुषेण स्पष्टम् एवं कथनीयम् 'अहम् एतत् कर्म कर्तुं न इच्छामि' इति। व्याजस्य उपरि व्याजः न प्रत्युपानेतव्यः।

अभ्यासः

१ हिन्दीभाषायामर्थं ब्रूहि — यं कमपि व्याजं प्रत्युपानयति। व्याजस्य उपरि व्याजः न प्रत्युपानेतव्यः।

२ कस्य शब्दस्य कस्यां विभक्तौ कस्मिन् च वचने इदं रूपम् — मह्यं, मम, अहम्, माम्, मया।

३ कोऽत्र धातुः, कश्च लकारः — बभूव, अभवत्, अभूत् ।
को नाम भूतकालः ? तस्मिंश्च के के लकाराः प्रयुज्यन्ते ?

—

षष्ठः पाठः

# चौरः

| | | |
|---|---|---|
| आददानम् | प्रलपन् | आरुह्य |
| असम्बद्धम् | भृशम् | अवेद्य |

कश्चित् चौरः कस्मिंश्चित् फलोद्याने आम्र-वृक्षम् आरुह्य आम्राणि चोरयति स्म । अस्मिन् एव अनन्तरे उद्यानस्य स्वामी तत्र आगच्छत् । फलानि च आददानं चौरम् अवलोक्य स्वामिना पृष्टम् — 'कुतः रे ! वृक्षम् आरुह्य आम्राणि चोरयसि ?' चौरः अवदत् — 'अहम् अत्र आरूढः फलानि न चोरयामि, अपि तु गवाम् अर्थं तृणानि अन्विषामि ।' 'अन्ध ! कुतः अत्र तृणानि' इति क्रुद्धेन स्वामिना पृष्ठः असौ वृक्षात् अवातरत् । अवतीर्य स्वामिनम् अकथयत् 'अस्मिन् आम्रतरौ न तृणानि' इति अवेद्य एव अहम् अवतीर्णः अस्मि ।

एवम् असम्बद्धं प्रलपन् स 'चौरः अयम्' इति स्वामिना भृशं दण्डितः ।

अभ्यासः

१ चौरः फलोद्याने किं अकरोत् ?
चौरं अवलोक्य स्वामिना किं पृष्टम् ?

२ स वृक्षम् आरोहति । ( काऽत्र विभक्तिः ) ।
स वृक्षात् अवातरत् । ( काऽत्र विभक्तिः ) ।

३ कोऽर्थः — आरुह्य, अवतीर्य, अवेक्ष्य, अवलोक्य, आदाय । एषु शब्देषु किं साम्यम् ?

—

सप्तमः पाठः

# वाग्गुदः

| | | |
|---|---|---|
| विजयिनः | वाग्गुदः | आश्रितः |
| अन्यतमः | विहाय | समक्षम् |
| अस्निह्यन् | ध्रुवम् | अद्रुह्यन् |

एकदा पशूनां पक्षिणां च मिथः युद्धं बभूव । तत्र वाग्गुदेन न पशूनां पक्षः आश्रितः नापि पक्षिणाम् । अथ पशवः युद्धे विजयिनः अभूवन् । वाग्गुदः पशून् गत्वा अवदत् — 'अहम् युष्माकं पक्ष्यः अस्मि । पश्यत, मम पशूनाम् इव दन्ताः सन्ति ।'

अथ युद्धे पक्षिणां विजयः अभूत् । वाग्गुदः

पशून् विहाय पक्षिणां सकाशम् अगच्छत्, गत्वा च तान् अवदत् — 'अहं न पशुषु भवामि । अहं तु पक्षिणामेव अन्यतमः अस्मि । पक्षिणः आकाशे पतन्ति । अहमपि आकाशे पतामि ।'

वाग्गुदः

एवं तेन न पक्षिणां पक्षः ध्रुवम् आश्रितः नापि पशूनाम् । पशवः पक्षिणः च न तस्मै अद्रुह्यन् नापि अस्निह्यन् । स कस्य अपि पक्षस्य प्रियः न अभवत् । अतः एव आत्मनः तेन भीरुणा कर्मणा लज्जितः वाग्गुदः दिवा पशूनां पक्षिणां वा समक्षं न भवति । रात्रौ सर्वेषु सुप्तेषु बहिः चरति ।

अभ्यासः

१ वाग्गुदः पशून् गत्वा किम् अवदत् ?
वाग्गुदः कथं पक्षिणामेव अन्यतमः ?
वाग्गुदः कस्मात् कारणात् लज्जते ?

२ कोऽर्थः — मिथः, अपि, इव, ध्रुवं, दिवा, बहिः । किं एषां सर्वासु विभक्तिषु रूपाणि भवन्ति ? एषां का संज्ञा ? —

अष्टमः पाठः

# चन्द्रमाः

| | | |
|---|---|---|
| द्रष्टुम् | उद्यच्छन्ति | शिशुः |
| स्प्रष्टुम् | शक्नुवन्ति | रोचते |

रात्रौ चन्द्रमसः प्रकाशः कियान् रोचते । चन्द्रमसि उदिते रात्रेः सर्वः अन्धकारः विनश्यति ! चन्द्रमसः प्रकाशः सूर्यस्य प्रकाशः इव तीव्रः न भवति । सूर्यं प्रति कश्चित् अपि चिरं द्रष्टुं न शक्नोति । चन्द्रमसं प्रति तु शिशुः अपि प्रेम्णा चिरं द्रष्टुं शक्तः । शिशुभ्यः चन्द्रमाः भृशं रोचते । शिशवः रात्रौ चन्द्रमसम् आदातुं पुनः पुनः हस्तौ उद्यच्छन्ति । परं तस्य दूरत्वात् तं स्प्रष्टुं न शक्नुवन्ति । चन्द्रस्य प्रकाशः चन्द्रिका इति कथ्यते । निर्मलायां रात्रौ पूर्णस्य चन्द्रमसः चन्द्रिकाम् अवलोक्य प्रतीयते यत् आकाशः दुग्धं वर्षति । नद्याः तीरे स्थित्वा चन्द्रमसः चन्द्रिकायाः च अवलोकनम् अतीव मनोरमं भवति । मह्यं तु सूर्यात् चन्द्रः अधिकं रोचते ।

अभ्यासः

१ चन्द्रमाः कदा उदयते ?
चन्द्रमसि उदिते रात्रेः सर्वः अन्धकारः कुत्र गच्छति ?

शिशुभ्यः चन्द्रमाः रोचते सूर्यो वा । कस्मात् च कारणात् ?

चन्द्रमसः प्रकाशः किं कथ्यते ?

२ एषां रूपाणि ब्रूहि — चन्द्रमस्, कियान्, रोचते, प्रतीयते, शक्नोति ।

३ महद्यं चन्द्रः अधिकं रोचते ।

पक्षिणः तस्मै अद्रुह्यन् । ( काऽत्र विभक्तिः ) ।

—

नवमः पाठः

# नद्यः

| संगच्छन्ते | कुल्या | आरोप्य |
|---|---|---|
| विक्रेयाणि | संभुज्य | प्रभवन्ति |

नद्यः पर्वतेभ्यः प्रभवन्ति । ह्रस्वाः नद्यः दीर्घाभिः नदीभिः संगच्छन्ते । दीर्घाः नद्यः ह्रस्वाः नदी आदाय अन्ततः समुद्रेण संगच्छन्ते । नदीभ्यः कुल्याः संचार्यन्ते । कुल्यानां जलेन कृषिः सिच्यते । सेचनेन कृषिः

प्रभूतम् अन्नं जनयति । अन्नं संभुज्य वयं जीवामः । नद्यः वाणिज्याय अपि उपयोगिन्यः भवन्ति । नौकासु विक्रेयाणि वस्तूनि आरोप्य नद्याः वेगेन देशात् देशं नीयन्ते । वर्षासु नदीनां जलं वेगः च बहुः वर्धते । तदानीं तासां जलं बहु मलिनम् अपेयं च भवति । वर्षासु नद्यः महतः वृक्षान् अपि उत्पाट्य समुद्रं नयन्ति । युष्माभिः कदाचित् वर्षाणां समये गङ्गा दृष्टा भवेत्, तदानीं तस्याः जलस्य वेगः दर्शकानां मनःसु भयं जनयति । परं तरणे प्रवीणाः वीराः बालाः तदानीम् अपि तस्याम् आनन्देन तरन्ति । ग्रीष्मे हेमन्ते च तदानीं जलम् अल्पं भवति । तस्याः वेगः अपि मन्दः जायते । जलं निर्मलं पेयं च सम्पद्यते ।

भारतस्य प्रसिद्धाः नद्यः गङ्गा-यमुना-सिन्धु-नर्मदा-गोदावरी-ब्रह्मपुत्राः सन्ति

अभ्यासः

१ नद्यः कस्मात् प्रभवन्ति ?
ह्रस्वाः नद्यः कुत्र गच्छन्ति ?
दीर्घा नद्यः च कुत्र गच्छन्ति ?
कुल्यानां जलेन किं क्रियते ?
सेचनेन को लाभः ?
नौकाभिः किं क्रियते ?
नदीनां जलं वर्षासु कीदृशं, ग्रीष्मे हेमन्ते च कीदृशं भवति ?
नदीनां वेगः वर्षासु कीदृशः, ग्रीष्मे हेमन्ते च कीदृशः भवति ?

भारतवर्षस्य काः काः नद्यः प्रसिद्धाः सन्ति ?

२ नद्यः पर्वतेभ्यः प्रभवन्ति ।

नदीभ्यः कुल्याः संचार्यन्ते ।

असौ वृक्षात् अवातरत् । ( काऽत्र विभक्तिः ) ।

---

दशमः पाठः

# लेखनी

| आपणे | कर्मान्तेषु | सङ्गनी |
|---|---|---|
| विपणौ | व्रश्चनम् | तक्षभिः |

रामः अपि जानासि हरिदत्त ! मम हस्ते किम् इदम् ?

हरिदत्तः आम् जानामि ।

रामः तर्हि कथय, किम् इदम् ?

हरिदत्तः तव हस्ते लेखनी वर्तते ।

रामः माम् आत्मनः लेखनीं दर्शय ।

हरिदत्तः इयम् अस्ति मम लेखनी, गृहाण ।

रामः तव लेखन्याः फलकं तु लोहमयं वर्त्तते । मम लेखनी तु सर्वा अपि नडस्य खण्डात् निर्मिता ।

हरिदत्तः आत्मनः लेखनीं दर्शय ।

रामः पश्य।

हरिदत्तः तव लेखन्याः लेखनाय फलकं कः करोति ?

रामः मम गुरुः व्रश्चनेन फलकं करोति। तव फलकं कः करोति ?

हरिदत्तः इमानि फलकानि तु कर्मान्तेषु लोहकाराः कुर्वन्ति ?

रामः तव लेखन्याः तु सञ्जनी अपि अति मनोरमा। इयं कुतः उपलभ्यते।

हरिदत्तः सञ्जन्यः अपि कर्मान्तेषु निर्मीयन्ते तद्वाभिः। परं त्वं तु लेखनीभूतां फलकेन युक्तां सञ्जनीं विपणौ कस्मिंश्चित् आपणे क्रेतुं शक्नोषि।

रामः अहम् अपि श्वः त्वया सह विपणिं गत्वा आपणात् एकां तव लेखनीसदृशीं लोहस्य फलकवतीं लेखनीं क्रेष्यामि। एषा मह्यं बहु रोचते।

हरिदत्तः वाढम्।

अभ्यासः

१ नडस्य लेखनीं दर्शय।
एतस्याः फलकं कः करोति ?
अपरस्याः लेखन्याः फलकं कीदृशं भवति ?
तत् फलकं कः करोति ?
इयं लेखनी कुतः उपलभ्यते ?

तव पार्श्वे कीदृशी लेखनी वर्तते ।
काष्ठपट्टेषु कया लेखन्या लिखन्ति ।

—

एकादश: पाठ:

## वर्षादिवस:

| | | |
|---|---|---|
| द्योतमाना | तारता | व्याप्तम् |
| करक: | संनत: | स्तनितम् |

अहो ! अद्य कियान् रमणीयः दिवसः वर्तते । दिशाम् अन्तेभ्यः आगत्य मेघैः सर्वम् अन्तरिक्षं व्याप्तम् । मेघानां विविधान् रागान् पश्यत । श्यामानां मेघानाम् अभ्यन्तरे द्योतमाना विद्युत् अपूर्वां शोभां दर्शयति । मेघानां स्तनितम् अपि आकर्णय । कदाचित् कदाचित् तु मेघानां स्तनितस्य तारता कर्णौ स्फोटयन्ती इव प्रतीयते । परं मेघस्य मन्दं स्तनितं तु हृदयम् आकर्षति । मन्ये अल्पेन कालेन एव वर्षाः भविष्यन्ति । जलस्य भारेण मेघः संनतः इव अवलोक्यते । अद्य वर्षासु स्नास्यामः । महान् आनन्द भविष्यति । मेघस्य गर्जनम् अनु मयूराः कूजन्ति नृत्यन्ति च । मह्यं नृत्यतां मयूराणां दर्शनम् अतीव रोचते ।

एषः मेघः वर्षितुम् आरब्धः । आगच्छ स्नामः । अहो ! वर्षाभिः सह करकाः अपि पतन्ति । अधुना युष्मासु कः वर्षासु स्नातुं उद्यतः । वयं सर्वे उद्यताः स्मः ।

अभ्यासः

१ वर्षासु अन्तरिक्षं कैः व्याप्तं भवति ?
मेघस्य कीदृशाः रागा भवन्ति ?
इयं विद्युत् कुत्र निवसति ?
मेघस्य गर्जनं अनु मयूराः किं कुर्वन्ति ?
वर्षाकाले यूयं किं किं पश्यथ ? तेषां नामानि ब्रूत ।

२ एतानि वाक्यानि स्वकाष्ठपट्टिकायां लिख —
अद्य रमणीयः दिवसः वर्तते ।
विद्युत् अपूर्वां शोभां दर्शयति ।
वर्षाभिः सह करकाः पतन्ति ।
मेघस्य मन्दं स्तनितं हृदयं आकर्षति ।
( अत्र को लकारः, स च कस्मिन् काले प्रयुक्तः ) ।

—

द्वादशः पाठः

# वर्गः

| वर्गः | मुञ्चामि | व्यस्मरम् |
|---|---|---|
| प्रस्तरपट्टिकासु | समीचीनम् | प्रसीदामि |

उपाध्यायः ब्रूहि भूमित्र ! युष्माकं वर्गे कति ब्रह्म-

चारिणः पठन्ति ।

भूमित्रः गुरुवर्य ! अस्माकं वर्गे विंशतिः ब्रह्मचारिणः पठन्ति ।

उपाध्यायः भोः बाला ! यूयम् सर्वे आत्मनः पुस्तकानि दर्शयत ।

बालाः श्रीमन् ! इमानि सन्ति ।

उपाध्यायः विश्वदेव ! तव पुस्तकानि क्व सन्ति ।

विश्वः गुरो ! अहम् तु अद्य गृहे एव स्वपुस्तकानि व्यस्मरम् ।

उपाध्यायः एतत तव कर्म महत् अनुचितम् । पुनः यदि पुस्तकानि विस्मरिष्यसि तर्हि दण्डं प्राप्स्यसि । अद्य त्वां मुञ्चामि । रुद्रदेव ! त्वम् आत्मनः मसीगर्भां दर्शय ।

रुद्रः उपाध्याय ! इयम् अस्ति मम मसीगर्भा ।

उपाध्यायः त्वम् आत्मनः लेखनीं मसीपात्रं च आनीतवान् असि न वा ?

रुद्रः इयम् अस्ति मम लेखनी, इदं च मम मसीपात्रम् ।

उपाध्यायः अहं कृष्णफलके कानिचित् अक्षराणि खडिकया लिखामि । युष्माभिः तानि अक्षराणि प्रस्तरपट्टिकासु लेखनीयानि ।

भूदेवः श्रीमन्! मम पार्श्वे प्रस्तरपट्टिका न अस्ति।

उपाध्यायः तर्हि त्वं काष्ठपट्टिकायां लिख।

देवशर्मा अहम् आत्मनः प्रस्तरलेखनीं गृहे व्यस्मरम्।

उपाध्यायः विष्णुमित्र! देवशर्मणे आत्मनः प्रस्तर-लेखनीं देहि।

विष्णुमित्रः एष ददामि।

उपाध्यायः अद्य सर्वैः समीचीनं लिखितम्। अद्य युष्मासु भृशं प्रसीदामि। संप्रति अध्ययनस्य समयः अतीतः। स्वानि पुस्तकानि कोशेषु वेष्टित्वा लेखनीः मसिपात्राणि च लेखन्या-धानेषु संस्थाप्य गृहाणि गच्छत।

## अभ्यासः

१ त्वं कस्मिन् वर्गे पठसि?
युष्माकं वर्गे कति विद्यार्थिनः सन्ति?
तव पुस्तकं इदानीं कुत्र वर्तते?
तव पार्श्वे मसिगर्भा वर्तते?

२ पठनाय लेखनाय च किं किं वस्तु उपयुज्यते?

३ इमानि वाक्यानि स्वकाष्ठपट्टिकायां लिख —
कृष्णफलके खडिकया अक्षराणि लिखन्ति।
प्रस्तरपट्टिकायां प्रस्तरलेखन्या अक्षराणि लिखन्ति।
काष्ठपट्टिकायां नडस्य लेखन्या अक्षराणि लिखन्ति।
संचिकायां लोहमयेन फलकेन अक्षराणि लिखन्ति।

४ को भेदः — स्मरति . . . विस्मरति।

मसिगर्भा पैन्सिल इति विज्ञेया। —

# लुब्धः श्वा

| अपूपम् | सेतुः | व्यादाय |
|---|---|---|
| प्रतिबिम्बम् | श्वा | उत्प्लुत्य |

एकदा कश्चित् कुक्कुरः मुखे अपूपम् आदाय कस्याश्चित् नद्याः सेतुं प्राप्तः। नद्याः पारे गमनाय सेतुं आरूढेन तेन जले आत्मनः प्रतिबिम्बम् अवलोकितम्। तत् अवलोक्य असौ अचिन्तयत् — अहो! अयम् अपरः श्वा मुखे अपूपम् आदाय गच्छति। अस्य मुखात् अपूपं आच्छिनद्मि। तस्मिन् गृहीते सति मम द्वौ अपूपौ भविष्यतः। एवं विचार्य असौ आत्मनः प्रतिबिम्बम् अपरं कुक्कुरं मन्यमानः मुखं व्यादाय उत्प्लुत्य नद्यां पतितः, जलस्य वेगवशाच्च

मृत्युं प्राप्तः ।

एवम् अतिलुब्धेन तेन शुना अपरस्य अपूपस्य प्राप्तेः इच्छया आत्मनः अपूपेन सह स्वप्राणाः अपि नाशिताः ।

### अभ्यासः

१ कुक्कुरः जले आत्मनः प्रतिबिम्बं दृष्ट्वा किं अचिन्तयत् ।
स कथं नद्यां पतितः ।

२ कस्य शब्दस्य कस्यां विभक्तौ रूपाणि — कस्यां, असौ, अयं, अस्य, तस्मिन् । एतेषां शब्दानां सर्वासु विभक्तिषु रूपाणि ब्रूहि ।

३ सन्धिच्छेदः — कश्चित् = कः + चित् ।
कस्याश्चित् = कस्याः + चित् ।

४ कोऽर्थः — प्राप्तः, अवलोकितः, नाशितः, पतितः ।
अत्र सर्वत्र भूतकाले क्त (त) प्रत्ययः ।
पूर्वपाठेषु एतादृशान् शब्दान् संगृहाण ।

—

## चतुर्दशः पाठः

# अन्धालातयोः

| | | |
|---|---|---|
| अलातम् | वहसि | विघट्टयेः |
| पार्श्वस्थः | धृत्वा | भञ्जयेः |

कश्चित् अन्धः रात्रौ हस्ते अलातम् आदाय स्कन्धे च पात्रं धृत्वा गच्छति स्म । तं कश्चित् पार्श्वस्थः अपृच्छत् — 'अयि ! न तव कश्चित् रात्रेः

दिनस्य वा विशेषः । तत् किमर्थं इदम् अलातं हस्ते वहसि ।' अन्धः उदतरत् — 'अहम् आत्मनः अर्थे अलातं न वहामि, अपि तु तव प्रकाशाय । त्वम् अन्धकारे मया सह न विघट्टयेः इति अलातं गृह्णामि, अन्यथा त्वं मम पात्रं भञ्जयेः ।'

अभ्यासः

१ कश्चित् अन्धः रात्रौ हस्ते किम् आदाय गच्छति स्म ?
किं स अन्धः आत्मनः अर्थे अलातम् अवहत् ?
अलातग्रहणस्य को लाभ आसीत् ।

२ कोऽत्र लकारः पुरुषश्च ? · · · विघट्टयेः, भञ्जयेः ।

३ कति पुरुषाः सन्ति । कस्मिन् अर्थे तेषां प्रयोगः ।
(ख) अत्र लट्लकारे यथासमीहितं पुरुषप्रयोगं विधेहि ।

| | |
|---|---|
| स स्वकीयं पुस्तकं · · · · · · । | वयं जले मुखं · · · · । |
| यूयम् अस्मिन् चित्रे किं · · · । | त्वं लेखन्या किं · · · । |
| आवां वर्षासु करकान् · · · · । | मयूराः सानन्दं · · · । |
| ते फलानि · · · · · · · · · · । | युवां कुत्र · · · · · · । |

—

पञ्चदशः पाठः

# पर्वतः

| | | |
|---|---|---|
| आच्छन्नानि | बहुलाः | नलिकम् |
| प्रस्रवन्ति | उन्नतः | छिद्रेभ्यः |

पृथिव्या अति उन्नतः भागः पर्वतः इति कथ्यते ।

केषुचित् पर्वतेषु शिलाः बहुलाः भवन्ति, केषुचित् च शर्कराः। पर्वतेषु वनानि अपि बहूनि भवन्ति। बहुषु पर्वतेषु बहवः निर्झराः प्रस्रवन्ति। गङ्गा-यमुना-प्रभृतयः नद्यः पर्वतेभ्यः एव प्रभवन्ति। नदीनां जलेन कियान् उपकारः जायते इति यूयं जानीथ। पर्वतेषु जायमानानि वनानि अपि महान्तम् उपकारं कुर्वन्ति। अस्माकं गृहाणां निर्माणे यानि काष्ठानि प्रयुज्यन्ते तानि प्रायः पर्वतेभ्यः एव आनीयन्ते। केचित् पर्वताः अति उन्नताः भवन्ति। तेषां शिखराणि सदा हिमेन आच्छन्नानि भवन्ति। ग्रीष्मसमये पर्वतेषु भ्रमणं महत् आनन्दकरं भवति। अनेके जनाः ग्रीष्मसमये द्वित्रेभ्यः मासेभ्यः पर्वतेषु निवासार्थं गच्छन्ति। तत्र नूनं ग्रीष्मस्य घर्मः न सन्तापयति। रसनाय च स्वादूनि फलानि लभ्यन्ते।

पर्वतेषु सिंहप्रभृतयः हिंस्रजन्तवः अपि भवन्ति। तेभ्यः आत्मनः रक्षार्थं जनाः नलिकं सह नयन्ति। किं युष्माभिः कदाचित् पर्वतेषु भ्रमणं कृतं, तत्र प्रियालानि च आस्वादितानि?

अभ्यासः

१ को नाम पर्वतो भवति।
पर्वतेषु कानि वस्तूनि भवन्ति।
नद्यः कस्मात् प्रभवन्ति।

उन्नतानां पर्वतानां शिखराणि कीदृशानि भवन्ति ।

पर्वतैः को लाभः ।

धनिकाः जनाः ग्रीष्मसमये पर्वतेषु कस्मात् गच्छन्ति ।

२ एतेषां शब्दानां रूपाणि लिख — पृथिवी, प्रभृतिः, कियत्, महत्, जन्तुः, आत्मन् ।

३ एतानि वाक्यानि ध्यानेन पठनीयानि, अर्थश्च कार्यः —

पृथिव्याः उन्नतः भागः पर्वतः इति कथ्यते ।

अस्माकं गृहाणां निर्माणे काष्ठानि प्रयुज्यन्ते ।

काष्ठानि पर्वतेभ्यः एव आनीयन्ते ।

पर्वतेषु स्वादूनि फलानि लभ्यन्ते ।

तक्षभिः सञ्जन्यः निर्मीयन्ते ।

—

षोडशः पाठः

# पठन् कुमारः

| | | |
|---|---|---|
| पूर्वेद्युः | उदतरत् | समाधानम् |
| अवर्धत | प्रज्वाल्य | निर्वर्तयति |

कृष्णः सूर्यस्य उदयात् प्राक् प्रबुध्यते स्म । प्रबुध्य च दीपं प्रज्वाल्य तस्य प्रकाशे कञ्चित् कालं पाठं स्मरति स्म । ततः सूर्ये उदिते, स्नात्वा ईश्वरस्य उपासनाम् अकरोत् । अत्रान्तरे तस्य माता तस्मै प्रातराशं निर्वर्तयति स्म । स प्रातराशं कृत्वा विद्यालयम् अगच्छत् ।

तत्र उपाध्यायः पूर्वेद्युः पठिते पाठे प्रश्नान् अकरोत् । कृष्णः उपाध्यायस्य सर्वेषां प्रश्नानां समाधानं सम्यक्तया अकरोत् । तेन उपाध्यायस्य प्रीतिः कृष्णे प्रतिदिनम् अवर्धत । अन्ये विद्यार्थिनः तु उपाध्यायस्य प्रश्नान् सम्यक्तया न उदतरन् । तेन ते उपाध्यायस्य प्रियाः न अभवन् । उपाध्यायस्य प्रीतिम् इच्छता बालेन सदा पठने यत्नः कार्यः ।

अभ्यासः

१ कृष्णः कदा प्रबुध्यते स्म । प्रबुध्य किं अकरोत् ।
सूर्ये उदिते स किं अकरोत् ।
प्रातराशं कृत्वा स कुत्र अगच्छत् ।
उपाध्यायः कस्मात् कारणात् कृष्णे प्रीतिं अकरोत् ।

२ ध्यानेन वाक्यानि पठत, भेदं च कुरुत ।
स सूर्योदयात् प्राक् प्रबुध्यते ।
स सूर्योदयात् प्राक् प्रबुध्यते स्म ।
स नित्यं पाठं स्मरति ।
स नित्यं पाठं स्मरति स्म ।
सेवकः तस्मै प्रातराशं निर्वर्तयति ।
माता तस्मै प्रातराशं निर्वर्तयति स्म ।
स स्कन्धे पात्रं धृत्वा गच्छति ।
स स्कन्धे पात्रं धृत्वा गच्छति स्म ।

३ एतानि वाक्यानि भूतकाले लेखनीयानि —
स सदा परमात्मानं ध्यायति ।
जनाः रक्षार्थं नलिकं सह नयन्ति ।
स हस्ते अलातं वहति । ( 'स्म' प्रयोगेण, लकारप्रयोगेण च ) ।

सप्तदश: पाठः

# पिपीलिका

| | | |
|---|---|---|
| तन्वी | प्रसीदतु | क्षिप्रम् |
| प्रातिवेशिकीम् | विषण्णा | सोढुम् |

काऽपि तन्वी पिपीलिका पथि गच्छन्ती तण्डुलम् एकम् अलभत । सा हि गुरुत्वात् तं तण्डुलं स्वयम् उत्थापयितुं लोठयितुं वा न अशक्त् । अतः प्रातिवेशिकीं पिपीलिकाम् अवदत् — 'भद्रे ! अहं हि अस्य तण्डुलस्य गुरुतया इमं नेतुं न शक्नोमि । भवती अस्य नयने साहाय्यं दातुं प्रसीदतु ।' सा अवोचत् — 'मम क्षिप्रं करणीयम् अन्यत् कार्यम् अस्ति । अतः अहं तव सहायतायाः दानेन जायमानं विलम्बं सोढुं न शक्ता । अतः भवती मम असमर्थतां क्षमताम् ।' तस्याः मनः स्वभावतः कुटिलम् आसीत् । अतः सा तस्याः साहाय्यं न अकरोत । अथ अपरा पिपीलिका तेन मार्गेन गच्छति स्म । सा तु तण्डुलस्य पार्श्वे तिष्ठन्तीं पिपीलिकाम् अवलोक्य दर्शनेन एव 'इयं साहाय्यम् इच्छति' इति अजानात । तस्याः पार्श्वे उपसृत्य अवोचत — 'भद्रे ! किमर्थं

विषण्णा तिष्ठसि ? अस्ति चेत् किमपि मम करणीयं, तर्हि कथय ।' तदाकर्ण्य 'आत्मनः बिलपर्यन्तं तण्डुलस्य नयने सहायताम् इच्छामि' इति प्रथमा पिपीलिका अवदत् । ततः आगतया पिपीलिकया सहर्षं तादृशी सहायता प्रदत्ता ।

स्वल्पः जन्तुः पिपीलिका अपि सजातीयस्य साहाय्यं करोति, तर्हि मनुष्यैः कथं न परस्परस्य साहाय्यं कर्तव्यम् ।

अभ्यासः

१ पिपीलिका पथि किं अलभत ?
सा कस्मात् कारणात् तं उत्थापयितुं न अशकत् ।
सा प्रातिवेशिकी पिपीलिकां किं अवदत् ?
सा च पिपीलिका किं अवोचत् ?
तर्हि तस्याः पिपीलिकायाः का सहायतां अकरोत् ।

२ वाक्य प्रयोगः —
सा तण्डुलं उत्थापयितुं न अशकत् ।
अहं इमं तण्डुलं नेतुं न शक्नोमि ।
अहं विलम्बं सोढुं न शक्ता ।
सूर्यं प्रति कश्चिद् अपि चिरं द्रष्टुं न शक्नोति ।
( नियमः — शक् धातु प्रयोगे तुमुन् प्रत्ययो भवति ) ।

३ लिंगभेदो अवलोकनीयः अधस्तनेषु पदेषु—

| | | | | |
|---|---|---|---|---|
| काऽपि | कोऽपि | । | सा | स |
| गच्छन्ती | गच्छन् | । | प्रातिवेशिकी | प्रातिवेशिकः |
| भवती | भवान् | । | इमां | इमम् |
| शक्ता | शक्तः | । | तव | तव |

( एतस्मिन् पदयुगले लिंगनिर्देशो वक्तव्यः )

(ख) किमत्र लिंगम् । अस्य विरोधि लिंगं ब्रूहि —

| | | | |
|---|---|---|---|
| तस्याः | तस्य | तिष्ठन्ती | ... |
| अपरा | ... | विषण्णा | ... |
| तादृशी | ... | प्रथमा | ... |

—

अष्टादशः पाठः

# उपाध्यायः

| | | |
|---|---|---|
| उपाध्यायः | प्रशस्तैः | प्रयासेन |
| उपगच्छति | श्रद्धालुम् | उपचरेत् |

यः कंचित् विद्यां पाठयति स तस्य उपाध्यायः भवति। स 'गुरुः' इति उच्यते। यः कस्यचित् पार्श्वे विद्यां पठति स तस्य शिष्यः भवति। स 'छात्रः' इति कथ्यते। विद्याम् इच्छन् बालः अक्षराणि अपि न जानन् आदौ गुरुम् उपगच्छति। तादृशं तं गुरुः महता प्रयासेन शास्त्रस्य सर्वम् अर्थं शनैः शनैः शिक्षयति। शिष्यः पठितं अपि अर्थं यदि पृच्छति, तर्हि तं तस्य उपाध्यायः पुनः पुनः उपदिशति। अहो! उपाध्यायः छात्रं प्रति कियतीं क्षमां, कियतीं च दयां करोति।

अपि च गुरुः श्रद्धालुं शिष्यं क्रमेण विविधान् ग्रन्थान् विविधाः च विद्याः अध्यापयति । शुभेषु आचारेषु च तं प्रवर्तयति । एवं गुरुणा शिक्षितः बालः समयेन पण्डितः जायते । तम् एनं गुरुं शिष्यः सर्वदा सत्कुर्यात् । तस्मिन् कृतज्ञः च भवेत् ।

मनुष्यः प्रशस्तैः भूषणैः अलंकृतः अपि विद्यां विना न शोभते, न च पूजां लभते । तस्मात् शिष्यः विद्यायाः दातारं गुरुं पितरम् इव उपचरेत् ।

### अभ्यासः

१ कः गुरुः भवति कश्च शिष्यः ।
गुरुः किं करोति ?
बालः कथं पण्डितः जायते ?
भूषणैः अलंकृतः पुरुषः कां विना न शोभते ।

२ कोऽर्थः — शिष्यः सदा गुरुं सत्कुर्यात् ।
शिष्यः गुरौ कृतज्ञः भवेत् ।
तस्मात् शिष्यः गुरुं पितरं इव उपचरेत् ।
( अत्र को लकारः, कस्मिंश्च अर्थे ) ।

३ अर्थभेदं कुरु —

| | |
|---|---|
| स विद्यां पठति । | स विद्यां पाठयति । |
| स धर्मं शिक्षते । | स धर्मं शिक्षयति । |
| शिष्यः ग्रन्थान् अधीते । | गुरुः ग्रन्थान् अध्यापयति । |
| स कार्ये प्रवर्तते । | स तं आचारे प्रवर्तयति । |

एकोनविंशः पाठः

# शरीरम्

[ क ]

| | | |
|---|---|---|
| अवयवाः | ऊरू | वक्षः |
| मणिबन्धौ | कूर्परौ | तालु |
| करभः | अक्षिणी | बाहू |

भूदेवः सोमदत्त ! आत्मनः शरीरस्य अङ्गानां नामानि कथय ।

सोमदत्तः पश्य, इदं मम शिरः । इयं मे ग्रीवा । इमौ मम हस्तौ । इदं मे वक्षः । इदम् उदरम् । इमौ ऊरू । इमे मम जंघे । इमौ च मे पादौ ।

भूदेवः आत्मनः मस्तकं कर्णौ च दर्शय ।

सोमदत्तः इदम् अस्ति मम मस्तकम् । इमौ च स्तः मम कर्णौ ।

भूदेवः आत्मनः अक्षिणी नासिकां कपोलौ च पश्य ।

सोमदत्तः अहम् आत्मनः अक्षिणी कपोलौ च द्रष्टुं न शक्नोमि । नासिकायाः तु कञ्चित् भागं पश्यामि । तव कपोलौ अक्षिणी च सम्यक् पश्यामि ।

शिरः
कर्णः
ग्रीवा
स्कन्धः
कूर्परः
हस्तः
मणिबन्धः
गुल्फः
पादः
अक्षि
नासिका
कपोलः
वक्षः
उदरं
ऊरु
जानु
जंघा

पुरुषस्य अङ्गानि

भूदेवः  आत्मनः नासिकायाः कं भागं पश्यसि ?

सोमदत्तः  आत्मनः नासिकायाः अग्रं भागं पश्यामि ।

भूदेवः  मुखस्य अवयवान् कथय ।

सोमदत्तः  इमौ मम ओष्ठौ । इयं मे जिह्वा । इदं मे तालु । अयं कण्ठः । इमे च मम दन्ताः ।

भूदेवः  आत्मनः स्कन्धौ दर्शय ।

सोमदत्तः  इमौ मे स्कन्धौ । इमौ मे बाहू स्कन्धाभ्यां संहितौ । इमौ कूर्परौ । इमौ मणिबन्धौ । अयं मे करभः ।

अभ्यासः

१ तात ! हस्तेन परामृश्य क्रमेण आत्मनः शरीरस्य अङ्गानां नामानि कथय ।

आत्मनः ऊरू, चक्षुषी, कपोलौ च दर्शय ।

मुखस्य के के अवयवाः सन्ति । अंगुल्या निर्दिश ।

२ एतेषां संस्कृते नामानि ब्रूहि — कोहनी, कलई, जांघ, गाल ।

—

विंशः पाठः

# शरीरम्

[ ख ]

जानु  गुल्फः  अरुणः

भूदेवः  आत्मनः हस्तस्य अंगुलीनां नामानि क्रमेण

ब्रूहि ।

सोमदत्तः अंगुष्ठः, तर्जनी, मध्यमा, अनामिका, कनिष्ठा इति क्रमेण अंगुलीनां नामानि सन्ति ।

भूदेवः आत्मनः पृष्ठं पश्य ।

सोमदत्तः अहम् अक्षिणी इव आत्मनः पृष्ठमपि द्रष्टुं न शक्नोमि । तव पृष्ठं तु द्रष्टुं शक्नोमि ।

भूदेवः ऊरोः जङ्घायाश्च सन्धिस्थानस्य किं नाम ?

सोमदत्तः ऊरोः जङ्घायाश्च सन्धिस्थानस्य जानु इति नाम भवति ।

भूदेवः पादं जङ्घया किं योजयति ?

सोमदत्तः पादं जङ्घया गुल्फः योजयति ।

भूदेवः पादयोः हस्तयोः च अंगुलीनां का संख्या ?

सोमदत्तः पादयोः हस्तयोः च अंगुलीनां संख्या विंशतिः भवति ।

भूदेवः अहो, तव अंगुलीनां नखाः भृशम् अरुणाः सन्ति । नखानां आरुण्यं स्वास्थ्यस्य सूचकं भवति ।

सोमदत्तः ज्ञानेन्द्रियाणाम् उपयोगं ब्रूहि ।

भूदेवः वयं अक्षिभ्यां रूपं पश्यामः । कर्णाभ्यां शब्दं शृणुमः । नासिकया गन्धं जिघ्रामः ।

जिह्वया रसं जानीमः त्वचया च स्पर्शं गृह्णीमः ।

अभ्यासः

१ युष्माकं करे कति अंगुलयः सन्ति । तेषां नामानि ब्रूहि ।
पादयोः हस्तयोश्च अंगुलीनां का संख्या ?
कटेः अधस्तात् अङ्गानि परिगणय ।

२ वाक्यानि पूरणीयानि —
अस्माकं शरीरे ·· ज्ञानेन्द्रियाणि सन्ति । वयं अक्षिभ्यां ·· पश्यामः ।
नासिकया गन्धं ···। ··· च स्पर्शं गृह्णीमः ।

—

## एकविंशः पाठः

# अतिलोभः

| | | |
|---|---|---|
| प्रसूते | प्रसवात् | अतुष्यत् |
| विदारयामास | दद्यात् | विरमति |

कस्यचित् पुरुषस्य एका हंसी आसीत् । सा

प्रतिदिनम् एकं सुवर्णमयम् अण्डं प्रसूते स्म । अति-लोभी स पुरुषः प्रतिदिनम् एकस्य अण्डस्य प्राप्त्या न अतुष्यत् । स एकदा अचिन्तयत् — यदि अहम् इमां हंसीं हन्याम्, तर्हि अस्याः उदरे स्थितानि सर्वाणि सुवर्णमयानि अण्डानि एकवारम् एव प्राप्नुयाम् । अन्यथा तु कः जानाति कदा इयं अण्डानां प्रसवात् विरमति । ततः स क्रूरः तस्याः उदरं विदारयामास । किन्तु तत्र एकम् अपि अण्डं न दृष्टवान् । मृता सा दीना हंसी कथम् अस्मै पूर्ववत् अण्डानि दद्यात् ।

अतिलोभिनः पुरुषस्य सिद्धः अपि आयः विनश्यति । अतः विदुषा नरेण कदा अपि लोभः न कर्तव्यः ।

अभ्यासः

१ सा हंसी प्रतिदिनं किं प्रसूते स्म ?

किं लोभी पुरुषः तेन अतुष्यत् ?

असन्तुष्टः स किं अकरोत् ?

उदरस्य विदारणेन किं अभूत् ।

अतिलोभः कस्मात् न कर्तव्यः ।

२ स्थूलाक्षरैरंकितानि पदानि किं उच्यन्ते ।

कस्यचित् पुरुषस्य गृहे एका हंसीं आसीत् । सा प्रतिदिनं एकं सुवर्णमयं अण्डं प्रसूते स्म । सा दीना हंसी मृता । (विशेषण) ।

३ कोऽत्र लकारः । लटि च अस्य किं रूपम् — आसीत्, अतुष्यत्, प्राप्नुयाम्, दद्यात् ।

—

द्वाविंशः पाठः

# विपणिः

| महार्घाणि | निधाय | सिता |
| --- | --- | --- |
| वणिजः | पटः | वीथी |

नगरेषु बह्व्यः वीथ्यः भवन्ति । यस्यां वीथ्यां वणिजः क्रय्याणि वस्तूनि निधाय विक्रीणते, सा विपणिः कथ्यते । विपणौ अनेके आपणाः भवन्ति । तत्र गोधूमाः तण्डुलाः मुद्गाः माषाः गुडः सिता शर्करा इत्यादयः आहारस्य अनुकूलाः पदार्थाः क्रेतुं शक्यन्ते । केषुचित् आपणेषु महार्घाणि विचित्राणि वस्त्राणि आभूषाणि च विक्रीयन्ते । ऋतौ ऋतौ उपयोगिनः सूत्रमया ऊर्णमयाः च पटाः विपणौ एव विक्रीयन्ते । ततः एव पटान् क्रीत्वा जनाः आत्मनः परिधानाय कंचुकानि इतराणि च वस्त्राणि निर्मापयन्ति । विपणिषु क्वचित् क्वचित् ईदृशा अपि आपणाः भवन्ति, यत्र सर्वप्रकाराणि वस्तूनि क्रेतुं शक्यन्ते । यदि किंचित् क्रेतव्यं भवेत्, तर्हि विपणौ गन्तव्यम् ।

भारते वाणिज्यस्य परमः उत्कर्षः मुंबापुरे अस्ति । धनस्य वर्धनाय वाणिज्यं मुख्यः उपायः ।

## अभ्यासः

१ रेखाभिः नगरस्य वीथीः, विपणीः, आपणान् च दर्शय ।
आपणेषु किं क्रियते ।
आपणेषु ये वस्तूनि विक्रीणन्ति ते किं उच्यन्ते ।
विपणौ कतिविधाः पटाः विक्रीयन्ते ।
शीतकाले त्वं कीदृशेन पटेन स्वकंचुकं निर्मापयसि ।
भारते वाणिज्यस्य प्रधानता कस्मिन् नगरे वर्तते ।

२ एतेषां शब्दानां रूपाणि ब्रूहि — विपणिः, वीथी, वस्तु, ऋतुः, शर्करा ।

३ आपणेषु के के भक्ष्यपदार्थाः क्रेतुं शक्यन्ते ?

—

त्रयोविंशः पाठः

# सरः

| सरः | इष्टका | स्तब्धम् |
|---|---|---|
| अन्या | नक्राः | प्रचुरम् |

यत्र जलं न प्रवहति, अपि तु स्तब्धं तिष्ठति तत् 'सरः' उच्यते । सरसि नद्याः कुल्यायाः वा जलम् आनीयते । बहूनि सरांसि वर्षाणां पानीयेन अपि पूर्यन्ते । बहूनां सरसां तीराणि इष्टकाभिः बद्धानि भवन्ति । यदा नद्यां जलस्य आधिक्यं भवति मेघः वा प्रचुरं वर्षति तदा सरः जलेन पूर्णं भवति, अन्यदा तत्र जलं स्वल्पं भवति । ग्रीष्मे केषुचित् सरस्सु जलस्य

नाम एव न शिष्यते ।

मनुष्यस्य स्नानाय पानाय च जलम् आवश्यकं भवति । येषु ग्रामेषु नद्यः न सन्ति तत्र जनाः सरसः एवं जलं पिबन्ति । पूर्णेषु सरस्सु मीनाः मण्डूकाः नक्राः च वसन्ति । इमे हि जन्तवः दिने दिने सरस्सु जायमानं मलं भक्षयन्ति । तेन जलं न दुष्यति । स्वल्पे जले इमे जन्तवः म्रियन्ते । मृत्वा च पानीयं दूषयन्ति । दूषितं जलं न पातव्यम्, नापि तस्मिन्न स्नातव्यम् । यस्मिन् सरसि नवं नवं जलं प्रायः न आयाति, तस्य जलं स्नानादिषु न उपयोक्तव्यम् । दूषितस्य जलस्य उपयोगेन बहवः रोगाः जायन्ते ।

येषु सरस्सु कमलानि विकसन्ति तेषां दर्शनम् अतीव मनोहरं भवति ।

अभ्यासः

१ यत्र जलं प्रवहति तत् किं उच्यते ?
यत्र च जलं स्तब्धं तिष्ठति तत् किं उच्यते ?
सरसि जलं कुतः आनीयते ?
सरः कदा जलेन पूर्णं भवति ?
येषु ग्रामेषु नद्यः न सन्ति तत्र जनाः कस्य जलं पिबन्ति ।
पूर्णेषु सरस्सु मीनादयः किं कुर्वन्ति ।
कीदृशस्य सरसः जलं न उपयोक्तव्यम् ?
दूषितस्य जलस्य उपयोगेन का हानिः ?

२ शब्दप्रयोगः — यदा, तदा, कदा, अन्यदा, सर्वदा — एतेषु किं साम्यम् ।

यत्र, तत्र, कुत्र, अन्यत्र, सर्वत्र — एतेषु किं साम्यम् ।
उपरि लिखितानां शब्दानां वाक्ये प्रयोगो विधेयः ।

३ विरोधिनः शब्दाः —
शिष्यते — नश्यति । चञ्चलं — स्तब्धं । अधिकं — स्वल्पं ।

—

चतुर्विंशः पाठः

# लोहः

| | | | |
|---|---|---|---|
| श्लक्ष्णम् | मण्डूरम् | अयः | दर्वी |
| निकषणात् | शाणः | असिः | टङ्कः |

श्यामः कश्चिद् धातुः 'लोहः' इति कथ्यते । तस्य अपरं नाम 'अयः' इति । तेन ये शिल्पं कुर्वन्ति ते 'लोहकाराः' 'अयस्काराः' इति कथ्यन्ते । लोहकाराः लोहेन सूचिं असिं कीलं दर्वीं तालकं कुञ्चिकां च कुर्वन्ति । पाषाणस्य भेदने शक्तः टङ्कः कर्तरी च अयसा क्रियते । लोहः स्वभावतः अति कठिनः भवति । स यदा अग्नौ परिताप्य किंचित् मृदुः क्रियते तदा एव अयस्काराः तस्मात् विविधानि वस्तूनि कर्तुं शक्नुवन्ति ।

घनेन हन्यमानं तप्तं अयः नमति, प्रसरति, संकुचति, दीर्घं च भवति । अयसा निर्मितं उपकरणं घर्ष-

णेन श्लक्ष्णं उज्ज्वलं च जायते । अयसि मलः मुहुः उत्पद्यते । अयसः मलः 'मण्डूरम्' इति कथ्यते । शाणे निकषणात् तस्य मलः अपगच्छति । कुशलाः शिल्पिनः अयसः विचित्रं शिल्पं कुर्वन्ति । लेखनीनां मुखानि अयसा एव क्रियन्ते । किं युष्माभिः कदाचित् लोहस्य लेखनी दृष्टा ? आम्, अस्माकं सर्वेषां लेखन्यः लोहस्य एव सन्ति ।

अभ्यासः

१ ये लोहेन शिल्पं कुर्वन्ति ते किं कथ्यन्ते ।
लोहकाराः लोहेन किं किं कुर्वन्ति ।
लोहः स्वभावतः कीदृशो भवति ।
स कथं मृदु क्रियते कथं च श्लक्ष्णः ।
मण्डूरं किं भवति ।

२ इमानि वाक्यानि पूरय — ये लोहेन शिल्पं कुर्वन्ति ते — भवन्ति । ये चर्मणा शिल्पं कुर्वन्ति ते — भवन्ति । ये सुवर्णेन — कुर्वन्ति ते — भवन्ति । ये सूच्या शिल्पं — ते — भवन्ति ।

३ एते शब्दाः कस्मिन् लिङ्गे सन्ति । एतेषां रूपाणि लिख — अयः, सरः, पयः, मनः, सूचिः, असिः, कुंजिका ।

—

पञ्चविंशः पाठः

# अश्वतरो गर्दभश्च

अश्वतरः आप्लुतः क्लेदनम्

एकदा अश्वतरः गर्दभः च कामपि नदीं तरतः

स्म । अश्वतरस्य पृष्ठे लवणस्य, गर्दभस्य च पृष्ठे ऊर्णायाः भारः आसीत् । अकस्मात् अश्वतरस्य भारः जलेन आप्लुतः अभवत् । तेन लवणस्य पयसि द्रवणात् स भारः लघुः अभवत् । अश्वतरः आत्मनः इदं भाग्यं गर्दभाय अवदत् । गर्दभः अचिन्तयत् — नूनं जले भारस्य क्लेदनं तस्य लघूकरणस्य उपायः वर्तते । ततः अपरां नदीं तरन् गर्दभः आत्मनः ऊर्णायाः भारं जले अमज्जयत्, तं च आर्द्रं अकरोत् । आर्द्रः भूतः स ऊर्णायाः भारः गुरुतरः भवत् ।

यः अर्थः अपरस्य उपकाराय भवति स आत्मनः अपि उपकाराय भविष्यति इति न मन्तव्यम् । बुद्ध्या विचार्य कस्यचिद् अर्थस्य ग्रहणं त्यागो वा कर्तव्यः ।

अभ्यासः

१ अश्वतरस्य पृष्ठे कस्य भारः आसीत्, गर्दभस्य च पृष्ठे कस्य ?
यदा अश्वतरस्य भारः जलेन आप्लुतः तदा किं अभूत् ?
यदा गर्दभः आत्मनः भारं जले अमज्जयत् तदा किं अभूत् ?
अनया कथया का शिक्षा लभ्यते ?

२ को भेदः — भवति, अभवत्, भविष्यति ।
अत्र को धातुः, कश्च लकारः । स च कं कालं बोधयति ।

३ कालभेदेन पुरुषभेदेन च 'पठ्' धातुमाश्रित्य नव वाक्यानि लिख ।

| | | | | |
|---|---|---|---|---|
| वर्तमाने लट् — | स | ... | ... | ( पठ् ) |
| | त्वं | ... | ... | ( पठ् ) |
| | अहम् | ... | ... | ( पठ् ) |

भविष्यति लृट् — तौ ... ... (पठ्)
युवाम् ... ... (पठ्)
आवाम् ... ... (पठ्)
भूते लङ् — ते ... ... (पठ्)
यूयम् ... ... (पठ्)
वयम् ... ... (पठ्)

—

## षड्विंशः पाठः

## तक्षा

| वेधनिका | आसन्दी | वाश्या |
|---|---|---|
| अर्जयन्ति | प्रतिमा | क्रकचः |

यः दारुणि शिल्पं करोति स 'तक्षा' भवति। असौ वाश्या क्रकचेन काष्ठं तक्षति। वेधनिकया दारुषु यथाऽभिलषितं छिद्राणि करोति। तक्षा दारुभिः बहूनि

वस्तूनि निर्मिनोति । स पेटीं, मञ्चं, स्नानपीठम्, आसन्दीं च दारुभिः एव निर्मिनोति । अन्यानि अपि बहूनि उपयोगीनि उपकरणानि तक्षा दारुभिः सृजति । रुचिराः प्रतिमा अपि तक्षाणः दारुभिः सृजन्ति । कासुचित् प्रतिमासु तक्ष्णां चातुर्य्यं शिल्पं च अवलोक्य पुरुषस्य बुद्धिः चकिता भवति । चतुराः तक्षाणः प्रतिमाभिः बहु धनम् अर्जयन्ति । तक्षाणः गृहाणां रचनाय उपयोगीनि कपाटप्रभृतीनि वस्तूनि अपि दारुणा एव सृजन्ति । गृहस्य निर्माणे काष्ठं बहुलं उपयुज्यते ।

दारुषु शिल्पं कर्तुं कुशलाः तक्षाणः काश्मीरेषु बहवः सन्ति । अहम् एकदा काश्मीरान् गत्वा दारुणः शिल्पं द्रक्ष्यामि ।

## अभ्यासः

१ तक्षा को भवति ?
   तक्षा कथं काष्ठं तक्षति, कथं च तस्मिन् छिद्राणि करोति ।
   तक्षा दारुभिः कानि वस्तूनि निर्मिनोति ।
   कुशलाः तक्षाणः कुत्र सन्ति ।
२ एतेषां शब्दानां रूपाणि ब्रूहि — तक्षन्, दारु, प्रतिमा, पेटी ।
३ कोऽर्थः — पेटी, उपयुज्यते, निर्मिनोति, सृजति ।

—

# संवादः

| प्रतिरूपणं | आर्यः | अद्यतनः |
|---|---|---|
| अपि | क्षमे | पारितम् |

उपाध्यायः विष्णुमित्र ! किं कारणं, अद्य त्वया स्वकीयः पाठः न स्मृतः ।

विष्णुमित्रः आर्य ! सत्यम् । अद्यतनः पाठः अतीव कठिनः आसीत् ।

उपाध्यायः अस्ति अद्यतनः पाठः पूर्वेभ्यः पाठेभ्यः कठिनः, तथापि किं कठिनस्य पाठस्य अर्थः न ज्ञातव्यः ? स्मरणं च न कर्तव्यम् ।

विष्णुमित्रः न आर्य खलु एवं कथयामि । किन्तु कठिनस्य पाठस्य स्मरणाय विशेषेण परिश्रमः कर्तव्यः भवति । स च परिश्रमः मया गृहे न कृतः ।

उपाध्यायः कस्मात् ?

विष्णुमित्रः स्मरणाय पर्याप्तः समयः मया न आसादितः । यतः पिता माम् एकस्य दीर्घस्य लेखस्य प्रतिरूपणे नियोजितवान् ।

तस्य प्रतिरूपणम् आत्मनः पाठस्य स्मरणं च इति उभयं मया कर्तुं न पारितम् ।

उपाध्यायः एवं चेत्, आत्मनः कथने विश्वासाय पितुः पत्रम् आनय ।

विष्णुमित्रः तथा करोमि ।

उपाध्यायः अस्तु, इदानीं तव एव वचने विश्वासं करोमि, त्वां च क्षमे । अपि जानासि अस्य कारणम् ?

विष्णुमित्रः आर्य न खलु जानामि ।

उपाध्यायः यतः त्वं मया सदा सत्यवादी दृष्टः असि ।

अभ्यासः

१ कठिनः पाठः कथं स्मर्यते ।
विष्णुमित्रेण स्वकीयः पाठः कुतो न स्मृतः ।
उपाध्यायेन विष्णुमित्रस्य वचने कस्मात् विश्वासः कृतः ।

२ यथांकितं अन्यान् शब्दान् रचय —

| | | | |
|---|---|---|---|
| अद्य | अद्यतनः । | सायं | ... |
| श्वः | ... । | चिरं | ... |
| ह्यः | ... । | पुरा | ... |

३ कोऽर्थः — ज्ञातव्यः, कर्तव्यः, पठितव्यः, स्मर्तव्यः, स्नातव्यम्, उपयोक्तव्यम्, गन्तव्यम्, दातव्यम् । ( एषु कः प्रत्ययः कस्मिंश्च अर्थे ) ।

—

# अस्माकं भारतम्

| आंग्लेयाः | पुरा | गरिष्ठः |
| --- | --- | --- |
| महम्मदीयाः | उपलभ्यन्ते | वन्दना |

अस्माकं देशः 'भारतं' कथ्यते। पुरा अस्मिन् भारते रामः, युधिष्ठिरः, चन्द्रगुप्तः, विक्रमादित्यः, भोजः, इति बहवः राजानः राज्यम् अकुर्वन्। तेषु राज्ञाम् उचिताः सत्यं, दया, न्यायः, शौर्य्यं, नीतिः इति एते सर्वे गुणाः आसन्। ते सर्वदा धर्मं नीतिं च अनुसरन्तः प्रजानां पुत्रवत् पालनम् अकुर्वन्। तेषां राज्ये सर्वे सुखिनः आसन्। अतः एव तेषां कीर्तिं जनाः अद्यापि गायन्ति।

अथ काले गच्छति सति आर्य-मते स्थितानां राज्ञां बलं, पौरुषं च क्रमेण क्षीणम् अभवत्। तदा महम्मदीयाः, पश्चात् च आंग्लेयाः भारतम् आधीनम् अकुर्वन्। अद्यत्वे पुनः भारते भारतीयानामेव स्वाधीनं जनतन्त्रं राज्यं वर्तते।

भारतस्य उत्तरस्यां दिशि हिमालयः, पश्चिमस्यां अफगान-बलोच देशो आरब्यः सागरः च, दक्षिणस्यां

भारतसमुद्रः, पूर्वस्यां वङ्गसागरः ब्रह्मदेशः च वर्तन्ते। अस्मिन् गङ्गा-प्रभृतयः बह्वयः नद्यः प्रवहन्ति। अत्र हि सर्वे धातवः उपलभ्यन्ते। सर्वाणि अन्नानि उत्पद्यन्ते।

अस्माकं भारतम्

सर्वे वृक्षाः प्ररोहन्ति। सर्वाणि च फलानि जायन्ते। सर्वाणि च रत्नानि प्राप्यन्ते। पृथिव्यां सर्वेभ्यः देशेभ्यः गरिष्ठः अस्माकम् एव देशः वर्तते। स्वदेशं 'मातृ-

भूमिः' इत्यपि कथयन्ति। मातृभूमेः मातुः इव वन्दना तु सदा सर्वैः कर्तव्या।

अभ्यासः

१ अस्माकं देशस्य किं नाम वर्तते ?
पुरा अस्मिन् भारते के के राजानः राज्यं अकुर्वन्।
ते राजानः कथं प्रजानां पालनं अकुर्वन्।
कस्मात् तेषां कीर्तिं जना अद्यापि गायन्ति ?
अद्यत्वे भारते केषां राज्यं वर्तते।
अस्मात् पूर्वं केषां राज्यं आसीत्।
भारतस्य चतसृषु दिक्षु के के देशाः सन्ति।
अस्माकं मातृभूमिः का वर्तते।
तदर्थं अस्माकं किं कर्तव्यं वर्तते।

२ एषु धातुषु के परस्मैपदिनः, के च आत्मनेपदिनः —
गायन्ति, प्ररोहन्ति, प्रवहन्ति।
उत्पद्यन्ते, जायन्ते, प्राप्यन्ते, वर्तन्ते।

—

एकोनत्रिंशः पाठः

# नीतिः

| प्राज्ञः | मेधा | श्रेयः |
|---|---|---|
| सन्निधौ | वैरा | वचः |

मेधायाः भूषणं विद्या, विद्यायाः भूषणं वचः।
वचसः भूषणं सत्यं, श्रेयः तेन हि वर्धते॥ १॥

पण्डिते हि गुणाः सर्वे, मूर्खे दोषाश्च केवलाः।
तस्मान्मूर्खसहस्रेभ्यः, प्राज्ञ एको विशिष्यते ॥ २ ॥

सत्यं तपो ज्ञानमहिंसता च,
विद्वत्प्रणामश्च सुशीलता च।
एतानि यो धारयते स विद्वान्,
न केवलं यः पठति स विद्वान् ॥ ३ ॥

माता शत्रुः पिता वैरी, येन बालो न पाठितः।
न शोभते सभामध्ये, हंसमध्ये बको यथा ॥४॥

पुस्तकेषु च नाधीतं, नाधीतं गुरुसन्निधौ।
न शोभते सभामध्ये, हंसमध्ये बको यथा ॥५॥

उद्यमं साहसं धैर्यं, बुद्धिः शक्तिः पराक्रमः।
षडेते यत्र वर्तन्ते, तत्र देवः सहायकृत ॥६॥

उद्यमेन हि सिद्धयन्ति, कार्याणि न मनोरथैः।
न हि सुप्तस्य सिंहस्य, प्रविशन्ति मुखे मृगाः ॥७॥

# स्वाध्याय के लिए चुनी हुई पुस्तकें

## वैदिक साहित्य

| | | |
|---|---|---|
| मेरा धर्म | श्री प्रियव्रत वेदवाचस्पति | ७.०० |
| वेद का राष्ट्रिय गीत | „ „ | ५.०० |
| वेदोद्यान के चुने हुए फूल | „ „ | ५.०० |
| वरुण की नौका, दोनों भाग | „ „ | ६.०० |
| वैदिक विनय, तीन भाग | श्री अभय विद्यालंकार | २.००, २.००, २.०० |
| वैदिक ब्रह्मचर्य गीत | श्री अभय विद्यालंकार | २.०० |
| ब्राह्मण की गौ | „ „ | .७५ |
| आत्म-समर्पण | श्री भगवद्दत्त वेदालंकार | १.५० |
| वैदिक स्वप्न विज्ञान, १ भाग, | श्री भगवद्दत्त वेदालंकार | २.०० |
| वेद गीताञ्जली | श्री वेदव्रत वेदालंकार | २.०० |
| सोम-सरोवर, सजिल्द, अजिल्द | श्री चमूपति एम. ए. | २.००, १.५० |
| अग्निहोत्र | श्री देवराज विद्यावाचस्पति | २.२५ |
| वैदिक कर्तव्य-शास्त्र | श्री धर्मदेव विद्यावाचस्पति | १.५० |
| सोम | श्री बुद्धदेव विद्यालंकार | .२५ |

## धार्मिक और दार्शनिक

| | | |
|---|---|---|
| सन्ध्या सुमन | श्री नित्यानन्द वेदालंकार | १.५० |
| स्वामी श्रद्धानन्द जी के उपदेश, तीन भाग | | ३.७५ |
| आत्म-मीमांसा | श्री नन्दलाल एम.ए. | २.०० |
| वैदिक पशु-यज्ञ मीमांसा | श्री विश्वनाथ विद्यामार्तण्ड | १.०० |
| सन्ध्या-रहस्य | „ „ | २.०० |
| अथर्ववेदीय मन्त्र-विद्या | श्री प्रियरत्न आर्ष | १.५० |
| स्वर्ग | श्री बुद्धदेव विद्यालंकार | १.७५ |

---

पुस्तक भण्डार, गुरुकुल कांगड़ी, हरिद्वार।

ब्रह्म-यज्ञ — श्री बुद्धदेव ,, .३७
वैदिक अध्यात्म विद्या — श्री भगवद्दत्त वेदालंकार १.७५
प्रार्थनावली .२५
शत पथ में एक पथ .२५

## ऐतिहासिक

भारतवर्ष का इतिहास, तीन भाग — श्री रामदेव २.००, २.५०, ४.५०
बृहत्तर भारत (सचित्र) सजिल्द ७.००
श्री चन्द्रगुप्त वेदालंकार, अजिल्द ६.००
ऋषि दयानन्द का पत्र-व्यवहार, दो भाग — स्वामी श्रद्धानन्द .७५
हैदराबाद आर्य सत्याग्रह के अनुभव — श्री क्षितीश वेदालंकार .५०
योगेश्वर कृष्ण (दूसरा संस्करण) — श्री चमूपति एम.ए. ४.००

## संस्कृत ग्रन्थ

संस्कृत प्रवेशिका, प्रथम भाग ( सोलहवां संस्करण ) .८७
संस्कृत-प्रवेशिका, द्वितीय भाग .८७
बालनीति कथामाला १.१०
पाणिनीयाष्टकम् पूर्वार्द्ध, उत्तरार्द्ध [illegible].४७
पञ्चतन्त्र (सटीक) पूर्वार्द्ध, उत्तरार्द्ध २.००, २.२५
सरल शब्द रूपावली .६२
संस्कृत ट्रांसलेशन ऐण्ड कम्पोज़ीशन १.२५
अन्योक्ति शतकम् .२५
संस्कृत साहित्य पाठावलि .१२
रघुवंश संशोधित ( तीसरा सर्ग ) .२५
नीतिशतक संशोधित .१२
साहित्य पुष्पाञ्जलि .१९
अथ मरुत्सूक्तम् .२५

## शालोपयोगी पुस्तकें

| | | |
|---|---|---|
| विज्ञान प्रवेशिका, द्वितीय भाग | श्री यज्ञदत्त | १.२५ |
| आर्यभाषा पाठावलि (८वां संस्करण) | श्री भवानीप्रसाद | १.५० |
| अपने देश की कथा (बच्चों के लिए) | डॉ. सत्यकेतु | १.३७ |
| बिखरे हुए फूल | श्री बुद्धदेव विद्यालंकार | .३७ |
| दि मिडिल ईस्ट (अंग्रेजी में) | | ३.०० |

## स्वास्थ्य सम्बन्धी पुस्तकें

| | | |
|---|---|---|
| होमियोपैथी के सिद्धान्त | श्री ओम्प्रकाश विद्यालंकार | २.५० |
| आहार | श्री रामरक्ष पाठक | ५.०० |
| आसवारिष्ट | श्री सत्यदेव | २.५० |
| स्तूप निर्माण कला, सचित्र, सजिल्द | श्री नारायण राव | ३.०० |
| प्रमेह, श्वास, अर्शरोग | | १.२५ |
| जल चिकित्सा विज्ञान | श्री देवराज | १.७५ |

## श्री रामेश बेदी द्वारा लिखित स्वास्थ्य सम्बन्धी पुस्तकें

| | |
|---|---|
| शहद (उत्तरप्रदेश राज्य द्वारा पुरस्कृत) | ३.०० |
| लहसुन : प्याज (उत्तरप्रदेश राज्य द्वारा पुरस्कृत) | २.५० |
| तुलसी (उत्तरप्रदेश राज्य द्वारा पुरस्कृत) | २.०० |
| सोंठ (उत्तरप्रदेश राज्य द्वारा पुरस्कृत) | १.५० |
| मिर्च (उत्तरप्रदेश राज्य द्वारा पुरस्कृत) | १.०० |
| देहात की दवायें (भारत सरकार द्वारा मान्यता प्राप्त) | .७५ |
| त्रिफला (अ.भा. आयुर्वेद महासम्मेलन द्वारा पुरस्कृत) | ३.२५ |
| सांपों की दुनियां (सचित्र) सजिल्द | ५.०० |
| नीम : बकायन १.७५   पेठा : कद्दू | .५० |
| देहाती इलाज (तीसरा संवर्द्धित संस्करण) | १.०० |
| तुवरक : चाल मुग्रा | .७५ |
| बरगद (विशद गुण तथा उपयोग) | .७५ |
| शहतूत .४०   सर्पगन्धा | .४० |

---

पुस्तक भंडार, गुरुकुल कांगड़ी, हरिद्वार।

## गुरुकुल सम्बन्धी पुस्तकें

| | |
|---|---|
| गुरुकुल कांगड़ी का पचास वर्ष का इतिहास | .७५ |
| गुरुकुल के स्नातक ( सचित्र ) | ३.०० |
| नियमावली ( सम्पूर्ण ) | १.०० |
| पाठविधि — प्रथम से अष्टम तक | .२५ |
| पाठविधि — नवम तथा दशम | .५० |
| पाठविधि — वेद तथा साधारण महाविद्यालय | .६२ |

नोट : पाठविधि व नियमावली मंगाने के लिए धन अग्रिम आना आवश्यक है ।

### श्री इन्द्र विद्यावाचस्पति द्वारा लिखित उपयोग पुस्तकें

| | |
|---|---|
| ईशोपनिषद्भाष्य | २.०० |
| वक्तृत्व कला की प्रगति | १.२५ |
| मेरे पिता | ४.०० |
| सरला की भाभी ( सामाजिक उपन्यास | २.०० |
| सरला | [illegible] |
| आत्म बलिदान | ३.०० |
| जमींदार | २.०० |
| हमारे कर्मयोगी राष्ट्रपति | .५० |
| स्वराज्य और चरित्र निर्माण | १.२५ |
| आर्यसमाज का इतिहास ( प्रथम भाग ) | ३.०० |
| मुगल साम्राज्य का क्षय और उसके कारण | ६.५० |
| स्वतन्त्र भारत की रूपरेखा | १.५० |
| जीवन संग्राम | १.०० |
| सम्राट् रघु | १.२५ |
| महर्षि दयानन्द का जीवन चरित्र | १.५० |



पुस्तकें मिलने का पता —

पुस्तक भंडार, गुरुकुल कांगड़ी, हरिद्वार ।

## पञ्चतन्त्रकम् ( दो भागों में )

इस पुस्तक के प्रथम भाग में मित्रभेद और मित्र सम्प्राप्ति तथा दूसरे भाग में काकोलूकीय, लब्धप्रणाश और अपरिक्षित-कारक संगृहीत हैं । छात्रोपयोगी बनाने के लिए पाठ में आये कठिन स्थलों की नीचे संस्कृत में टिप्पणी दे दी गई है और प्रत्येक तन्त्र के अन्त में कठिन शब्दों का हिन्दी में अर्थ तथा कण्ठाग्र करने योग्य श्लोकों का निर्देश कर दिया गया है । अश्लील-अंश निकाल दिये गये हैं । पूर्व मध्यमा के विद्यार्थियों के लिए बहुत उपयोगी सिद्ध हुआ है । पाठशाला के मुख्या-ध्यापक के प्रमाण-पत्र भेजने पर छात्रों को १२॥ प्रतिशत कमीशन और दस प्रतियां एक साथ मंगाने पर २५ प्रतिशत कमीशन दिया जाता है ।

## सरल शब्दरूपावलि ( प्रथम खण्ड )

नवीन पद्धति के आधार पर यह पुस्तक गुरुकुल की प्रारम्भिक कक्षाओं, संस्कृत की प्राज्ञ, प्रथमा आदि प्रारम्भिक परीक्षा के विद्यार्थियों तथा राजकीय स्कूलों में मैट्रिक के छात्रों के पाठ्य क्रम की दृष्टि से रची गई है । इस में संज्ञा वाची शब्दों के अजन्त तथा हलन्त के क्रम के अतिरिक्त सर्वनाम, संख्या और विशेषण वाची शब्दों के भी क्रमशः रूप दिये गये हैं । प्रत्येक शब्द के नीचे तत्समान रूप वाले शब्दों का भी हिन्दी में अर्थ में उल्लेख कर दिया गया है । इन शब्दों को व्यावहारिक भाषा के प्रयोग में सहायक बनाने के विचार से कारक तथा विभक्तियों का भी प्रारम्भ में परिचय दे दिया गया है । प्रत्येक प्रकरण के अन्त में अभ्यासार्थ प्रश्न माला देने से यह पुस्तक छात्रों के लिए अत्यन्त उपयोगी सिद्ध हुई है ।